समाहारद्वन्द्व

(XXV) A Collective Copulative Compound is formed—

(i) with words of different genders that are names of countries, cities or rivers: as, कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्, गङ्गा च शोणश्च गङ्गाशोणम् &c.

(ii) with words signifying animals having natural enimity to each other; as अहिश्च नकुलश्च, अहिनकुलम् &c.

(iii) with words denoting:—

(*a*) limbs of the body.

(*b*) the kinds of force in an army, or

(*c*) the parts of a musical instruement; as पाणी च पादौ च, पाणिपादम्; हस्ती च अश्वश्च, हस्त्यश्वम्; प्रवालश्च प्रसेवकश्च, प्रवालप्रसेवकम् &c. and

(iv) with the names of little insects: as, यूका च लिक्षा च, यूकालिक्षम् &c.

[*a*] This compound is formed

optionally with the names of beasts, birds trees &c: as, शुकाश्च बकाश्च = शुकबकौ or शुकबकम्, प्लक्षाश्च न्यग्रोधाश्च = प्लक्षन्यग्रोधाः or प्लक्षन्यग्रोधम्, गावश्च महिषाश्च = गोमहिषाः or गोमहिषम् &c.

(*b*) These collective compounds are used in neuter singular only.

## WORDS.

| | |
|---|---|
| हंस *m*. the gander. | हस्तिन् *m*. the elephant. |
| कोकिल *m* the cuckoo. | शष्पाणि भक्षयत् = grazing. |
| पादात *m*. a foot-soldier. | महिष *m*. a buffallo. |
| पत्त *m*. a foot-soldier. | *गो *m*. a bull. |
| न्यग्रोध *m*. the Banyan tree. | |

Words ending in इन् are declined thus:—

Masculine.

हस्तिन् = an elephant.

| Singular. | Dual. | Plural. |
|---|---|---|
| हस्ती | हस्तिनौ | हस्तिनः |

* Declined specially. ( see grammar ).

| | | |
|---|---|---|
| हस्तिनम् | हस्तिनौ | हस्तिनः |
| हस्तिना | हस्तिभ्याम् | हस्तिभिः |
| हस्तिने | हस्तिभ्याम् | हस्तिभ्यः |
| हस्तिनः | हस्तिभ्याम् | हस्तिभ्यः |
| हस्तिनः | हस्तिनोः | हस्तिनाम् |
| हस्तिनि | हस्तिनोः | हस्तिषु |
| हे हस्तिन् | हे हस्तिनौ | हे हस्तिनः |

Feminine हस्तिनी

tobe declined like नदी

---

## EXAMPLES.

| | |
|---|---|
| हंसकोकिलं वने विहरति | The ganders and the cuckoos walk about in the wood. |
| कस्यै तद् हस्त्यश्वरथपादा-तम् । | Whose is this army consisting of elephants horses, chariots and foot? |
| प्लक्षन्यग्रोधे शुकाः क्रीडन्ति | The parrots sport on the fig and the Banyan trees. |
| सूर्याचन्द्रमसौ प्रकाश-मानौ स्तः । | The sun and the moon are giving light (or are visble). |

| | |
|---|---|
| व्याघ्रं दृष्ट्वा गोमहिषं पलायते । | The cows and the buffaloes scamper at sight of the tiger. |

—:o:—@—:o:—

*EXERCISE.*

There is a snake and an ichneumon in this garden. See the lion and the elephant. The parrots and the black birds sing in the Mango and the Nimba trees. Wash your hands and feet. See the cow and the bufalo grazing near the tank. The Ganges and the Brahmaputra fall into the Ocean.

———o———

## LESSON XIV.

### Determinative Compounds.

( तत्पुरुष )

—:-o-:—

### RULE.

( XXVI. ) When the first word has any class-termination except those of the first class and the second word has a first class ter

mination, the compound formed by the combination of these two words is called a * Determinative compound, as सीतायाः पतिः सीतापतिः । मम वचनम्, मद्वचनम् । तस्य पुस्तकम्, तत्पुस्तकम् । चन्द्रस्य प्रभा, चन्द्रप्रभा &c.

(XXVII) Determinative compounds are also formed in various, ways as नृपस्य सभा, नृपसभम्—पिप्पल्या अर्द्धम्, अर्द्धपिप्पली,—पूर्वं कायस्य, पूर्वकायः—दन्तानां राजा, राजदन्तम्—न सुखम् असुखम्—

In some cases. the terminations of the first word are not rejected : as आत्मनेपदम्, परस्मैपदम्, युधिष्ठिरः, कर्णेजपः, स्तम्बेरमः, देवानांप्रियः, पश्यतोहरः, दास्याःपुत्रः, त्वचिसारः, वाचोयुक्तिः, दिवोदासः, पितुःष्वसा, मातुःष्वसा &c.

---

## WORDS.

भ्रम *1st* c. *and* *4th* c. P. to wonder, to roam.

झं + कृ to buzz.

शाखा *f.* branch.

दल *n.* a leaf.

वि + नि + विद् + अय ( of caustive) to request.

---

*These compounds are calle d after the termination of the first word : as द्वितीया तत्पुरुष &c.

वालिन् *m.* The monkey king of Kiskindha.

गर्जन *n.* roaring or a thunder.

उपत्यका *f.* valley.

मधुकर *m.* a black bee.

सार्थ *m.* a crowd, a swarm.

चमत्कार *m.* brightness.

करुणा *f.* mercy.

वरुणालय *m.* the ocean.

तल *n.* bottom.

तुन्दिल *adf.* big-bellied.

विन्दु *m.* a drop.

मरन्द *m.* the honey of flowers.

---

## EXAMPLES.

| | |
|---|---|
| वृक्षशाखायाम् पतग-कलकलो भवति। | There is a noise of th birds among the bran ches of the trees. |
| कमलदलेषु मधुकर-सार्थो झङ्करोति। | A swarm of bees is buzzing among the lotus-leaves. |
| कुत एष चन्द्रचन्द्रि-काचमत्कारः? | Whence (is) this brightnese of the moon's light? |
| त्वन्मुखनिःसृतवच-नानि शृणोमि। | I hear the words that come out of your mouth. |
| किमधिकं विनिवेदया-मि श्रीमच्चरणेषु*। | What more shall I lay before you ? |

* चरण or पाद is added to nouns and pronouns for the sake of respect, as इत्याहुर्मम माता-महचरणास्तातपादाश्च।

| | |
|---|---|
| श्रीमत्सु करुणावरुणालयेषु प्रणम्य निवेदयति । | He lays ( this ) before makes known ( to ) your fortunate self, the ocean of mercy, after saluting you. |

.........o.........

*EXERCISE.*

रामवाणहतो बाली नष्टः । पर्वतशिखरेषु समुद्रतलेषु च ईश्वरोऽस्ति । तत्र सुखप्रभा चन्द्रचन्द्रिका * विजयते । मेघगर्जनं द्यावाभूमी व्याप्नोति । कृष्णो वनकुसुममालां बिभर्ति । कमलमरन्दबिन्दुतुन्दिला भ्रमरा भ्रमन्ति । कोकिलकूजितं † भ्रमरझङ्कारश्च कस्य मनो न हरति । मद्रचितं पुस्तकं क्वास्ति ।

‡ See, the son of Dasaratha comes. The water of the Ganges is white but the water of the Yamuna is black. This is written by me. There are parrots, black birds, and peacocks in the garden.

* ( परा or वि ) + जि becomes आत्मनेपद (see appendix. )

† त is also added to form a verbal noun. Words formed by the addition of this त are always used in Neuter.

‡ Translate using compound words.

I saw a lion and an elephant in the valley of this mountain.

---:o:---

## QUESTIONS.

[1] What are द्वन्द्व, समाहारद्वन्द्व, एकशेष and तत्पुरुष ?

[2] Expound बाललीला, गृहशोभा, पाणिपादम्, अहिनकुलम्, and श्रोत्रनयनम् ।

[3] Compound the following:—सूर्य्यश्च चन्द्रमाश्च, मित्रश्च, वरुणश्च, यूका च लिक्षा च, मम पुस्तकम्, तव गृहम्, गङ्गाया जलम्, नरस्य देहः, तव शिरः, तस्य भार्य्या, मम भ्राता, गुरूणां प्रसादः, तस्य ज्ञानम् ।

---:o:---

## LESSON. XV.

### Appositional compounds.

( कर्मधारय )

---:oo:---

## RULES.

( XXVIII ) A combination of adjectives and nouns is called an Appositional compound; as नीलं कमलम्, नीलकमलम् ।

( XXIX ) The adjective is placed first and if feminine takes the masculine forms as उत्तमा लता, उत्तमलता &c.

( XXX ) Appositional compounds are also formed in various senses; as विद्या एव धनं, विद्याधनम्;—नीलश्च लोहितश्च, नीललोहितः;—पूर्वं स्नातः पश्चात् अनुलिप्तः, स्नातानुलिप्तः;—अर्णव इव गम्भीरः, अर्णवगम्भीरः;—मेघ इव श्यामः, मेघश्यामः; पुरुषः सिंह* इव, पुरुषसिंहः &c.

—:oo:—

## NUMERAL COMPOUNDS.

### ( द्विगु )

### RULES.

( XXXI ) A kind of ( कर्मधारय ) in which the first member of the combination is a numeral is called a Numeral Compound.

( XXXII ) A numeral compound takes the termination of Neuter Singular, but some times its final vowel is changed into ई and then it takes the terminations of feminine singular; as पञ्चपात्रम्, त्रिभुवनम्,

*"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इत्यमरः

चतुर्युगम्, त्रिपथम्, चतुष्पथम्, पञ्चक्रोशी, सप्तशती, त्रिलोकी, दशमूली, सप्तपदी, पञ्चखट्वी, पञ्चखट्वम् &c.

………o………

## WORDS.

* महत् = Great, grand.

### DECLENSION.

* Masculine.

| Singular. | Dual. | Plural. |
|---|---|---|
| महान् | महान्तौ | महान्तः |
| महान्तम् | महान्तौ | महतः |
| महता | महद्भ्याम् | महद्भिः |
| महते | महद्भ्याम् | महद्भ्यः |
| महतः | महद्भ्याम् | महद्भ्यः |
| महतः | महतोः | महताम् |
| महति | महतोः | महत्सु |
| हे महन् | हे महान्तौ | हे महान्तः |

*In feminine महती [illegible] नदी

दीन *adj*. poor, helpless.
देव *m*. a deity.
दायक *adj*. a giver,
भिक्षा *f*. food given to a beggar.
कुशल *n*. well-being; *adj*. clever.
विषय *m*. subject of a discourse, matter.
चञ्चरीक *m*. a bee.
मान्य *adj*, respectable.
नील *adj*. blue.

—:-0-:—

## EXAMPLES.*

| | |
|---|---|
| प्रामाणिकनरः सर्वप्रियो भवति। | A reliable man is loved by all. |
| महामान्यजना दीनदयालवो भवन्ति। | The most respectable persons are kind to the poor. |
| रामचरणं नीलकमलैः पूजयामि। | I worship Rama's feet with blue lotuses. |
| त्रिलोक्यां महादेवः केन न सेव्यते। | Who in the three worlds ( i. e. whole world ) does not worship Mahadeva ? |
| परीक्षोत्तीर्णच्छात्राः पारितोषिकाणि प्राप्स्यन्ति | Pupils who passed at the examination will receive prizes. |

| | |
|---|---|
| प्रजाप्रियो नृपः कविभि-र्वर्ण्यते । | Poets praise the king who is loved by his people. |
| रामपत्न्याः कीर्त्या त्रिभुवनम् व्याप्तम् । | The whole world is filled with the fame of Rama's wife. |

---

*EXERCISE.*

श्रीमत्सु सज्जनमान्येषु, करुणावरुणालयेषु सर्व-प्रामाणिकपूजितेषु विद्वत्समितिगणनीयेषु, अस्मच्छिक्षा-भिक्षादायकेषु श्रीगुरुचरणेषु प्रणम्य निवेदयति,

यत्, महाशयानां करुणया अस्माकं सर्वं कुशलमस्ति, अहं सम्प्रति न्यायस्य ग्रन्थान् अवलोकयामि क्वचित्, क्वचित् सन्देहो भवति तद्विषये भवन्तं प्रक्ष्यामि । ग्रीष्मकालमतिवाह्य शीघ्रमेव तत्रागत्य श्रीमतः चरण-कमलं मस्तकेन स्प्रक्ष्यामि । इति किमधिकम् लिखामि ।

श्रीमच्चरणकमलचञ्चरीकः
श्रीदेवेन्द्रशर्मा

Friends, do you see these green leaves red flowers, yellow fruits and white lotuses ?

Drops of rain fall from the black cloud.

The beauty of the garden passes description.

We like the company of good men.

Poor men feel pain and rich men help them.

—.o:—O—:o:—

## QUESTIONS.

( 1 ) Give instance of irregular कर्मधारय.

( 2 ) Give some examples of कर्मधारय containing three or four words in each combination.

( 3 ) When is a द्विगुसमास declined in feminine ?

( 4 ) Correct the following:—

वस्त्ररक्तमानय । मधुरफलसुन्दरं गृहाण । तस्य कीर्त्या त्रिलोकी व्याप्तः । गजो महतीघण्टां कलयति । श्याममेघः पुरुषसुन्दरः समायाति ।

—.o:—@—.o.—

## LESSON XVI.

### RELATIVE COMPOUNDS. ( बहुव्रीहि )

——:oo:——

## RULES.

( XXXIII ) A combination of words which

denotes an object different from what the words signify, and which thus becomes an adjective to some noun or pronoun, is called a relative compound ( बहुव्रीहि ): as पीतम् अम्बरं यस्य स पीताम्बरः। दीर्घौ बाहू यस्य स दीर्घबाहुः। पुत्रेण सहितः, सपुत्रः।

(XXXIV) क is added to relative compounds which end in ऋ, ई or ऊ, (of feminine) or in उरस्, पुमस्, उपानह् &c; as, नदीमातृकः, जीवत्पितृकः, पठितकौमुदीकः, सुभगवधूकः, व्यूढोरस्कः, वीरपुंस्कः, सोपानत्कः &c.

(XXXV) Relative compounds ending in इन् take a final क in feminine; as, बहवो धनिनो यस्यां सा, बहुधनिका &c.

( XXXVI ) क is added on to all the other relative compounds but optionally:—बहुयशाः or बहुयशस्कः अधिकवयाः or अधिकवयस्कः; नष्टधनः or नष्टधनकः &c.

INDECLINABLE COMPOUNDS ( अव्ययीभाव )

—o—

RULES.

( XXXVII ) When the first word of a combination is an indeclinable, the compound

formed is called an Indeclinable compound [ अव्ययीभाव ]

(XXXVIII) Indeclinable compounds take the singular terminations only of the second class and thus remain indeclinable, as कूलस्य समीपे, उपकूलम्। दिने दिने, प्रतिदिनम्। रुचिमनतिक्रम्य; यथारुचि। वर्षे वर्षे प्रतिवर्षम्। समुद्रपर्यन्तम्, आसमुद्रम्।

(xxxix) Some Indeclinables take the terminations of the 3rd 5th and 7th classes also as उपकूलेन, आसमुद्रात् प्रत्येकस्मिन् &c.

---

WORDS.

*नदीमातृक *m*. watered by a river.

व्रीहि *m*. rice of various kinds.

तरु *m*. a tree.

तरुण *adj*. young, fresh.

नेत्र *n*. an eye.

दीर्घ *adj*. tall, long.

बाहु *m*. the arm.

गौर *adj*. white, clean.

वर्ण *m*. colour.

* "देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः।
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्" ॥ इत्यमरः

वर *adj*. best, *noun* blessing, bridegroom

लीला *f*. pastime, amorous sport,

चित्त *n*. the heart.

पर्यटत् *adj*. roming,

वप् *1st. c. a. p.* to sow, to weave.

स्थिति *f*. state or condition.

वृत्तान्त *m*. news.

सूचन *n*. information,

*EXAMPLES*

| | |
|---|---|
| नद्येमातृके देशे ग्रामजनैः उपकूलं व्रीहय उप्यन्ते । | In a coutry watered by a river, the country people sow various kinds of rice on the banks. |
| पाचकाः प्रतिदिनं प्रतिगृहं भ्रमन्ति । | The cooks wander daily from house to house. |
| कुसुमोद्यानेषु तरुतलेषु तरुणजना यथारुचि विहरन्ति । | Young people take a pleasure walk at will under the tree in a flower garden. |
| के एते विशालनेत्रा दीर्घबाहवो गौरवर्णाश्च नराः? | Who are these men, with large eyes, long arms and fair colour? |

*EXERCISE.*

प्रियवर,

चिरात् तव पत्रं न प्राप्तम् । तत्किं मां विस्मृतवा-

नसि ? स्मरन् वा स्नेहं त्यक्तवानसि ? किं कारणमिति बोद्धुं न शक्नोमि । अहं तु प्रतिक्षणं त्वामेव स्मरन् स्वप्नेष्वपि च त्वामेव पश्यन् त्वदालापान् शृण्वन्निव, त्वल्लीला विलोकयन्निव, त्वदपहृतचित्तः कथं कथमपि यापयामि दिवसान् । गृहं गमिष्यतः उपपर्वतं मया सह पर्यटता, कुसुमगुच्छशोभितदक्षिणकरकमलेन, मत्स्कन्धारोपितवामहस्तेन त्वया यत् प्रतिज्ञातं तत् किं न स्मरसि ? क्व सा प्रतिदिनं पत्रं प्रेषयिष्यामि इति प्रतिज्ञा, क्व चैषा मासमासं तूष्णीं स्थितिः ? किमपि भवतु इतोऽप्युज्जीवय मां स्ववृत्तान्तसूचनेन । इति किमधिकं कथयेत् ।

त्वदीयः
स एव
श्रीमनोरञ्जन-शर्म्मा

---:00:---

## QUESTIONS.

( 1 ) Name all the *samasas* and give five examples of each of them.

( 2 ) Expound the following:—पीताम्बरः, नीलकमलनयनः, पुत्रदारमित्रादिकम्, सोपवनम्, भवत्कृपापात्रम्, श्रीचरणदर्शनविवृक्षालसः ।

(3) Explain and name the *samasas* in:—
मपुत्रः, घृतलवणतैलतन्दुलवस्त्रेन्धनचिन्ता, अहिनकुलयुद्धम्, रामवाणहतः; नयनवारिबिन्दुनिचयार्द्रवस्त्रः महादेवः, and महाकाली।



## APPENDIX No. I

## अथ सिद्धान्तकौमुदीधृता अनिट्कारिकाः ।

---

ऊदृदन्तैर्यौति-रु-क्ष्णु,-शीङ्-स्नु-नु-क्षु-श्वि-डीङ्-श्रिभिः ।
वृङ्-वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥१॥
शक्लृ-पच्-मुच्-रिच्-वच्-विच्-सिच्,-प्रच्छि त्यज्-निजिर् भजः ।
भञ्ज्-भुज्-भ्रस्ज्-मस्जि-यज्-युज्-रुज्,-रञ्ज्-विजिर्-स्वञ्जि-सञ्ज्-सृजः ॥२॥
अद्-क्षुद्-खिद्-छिद्-तुदि-नुदः,-पद्य-भिद्-विद्यति-विनद् ।
शद्-सदी स्विद्यतिः स्कन्दि,-हदी क्रुध-क्षुधि बुध्यती ॥३॥
बन्धियुधिरुधी राधि,-व्यध्-शुधः साधि-सिध्यती ।
मन्य-हन्नाप्-क्षिप्-छुपि-तप्-तिप,-स्तृप्यति-दृप्यती ॥ ४ ॥
लिप्-लुप्-वप्-शप्-स्वप्-सृपि-यभ्-रभ्-लभ्-गम्-नम्-यमो-रमिः ।
क्रुशि-दंशि-दिशी दृश् मृश्, रिश् रुश् लिश् विश् स्पृशः कृषिः ॥ ६ ॥
त्विष् तुष् द्विष् दुष् पुष्य पिष् विष्, शिष् शुष् श्लिष्यतयो घसिः ।
वसतिर्दह दिह दुहो, नह् मिह् रुह् लिह् वहिस्तथा ॥६॥
अनुदात्ता हलन्तेषु, धातवो द्व्यधिकं शतम् ।

तुदादौ मतभेदेन, स्थितौ यौ च चुरादिषु ॥ ७ ॥
तृप्-दृपौ तौ वारयितुं श्नना निर्देश आदृतः ।
स्विद्य-पद्यौ सिध्य-बुध्यौ, मन्य-पुष्य-श्लिषः श्यना ॥८॥
वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ।
निजिर्-विजिर् शक्, इति, सानु बन्धा अमी तथा ॥९॥
विन्दतिश्चान्द्रदौर्गादे, रिष्टो भाष्येऽपि दृश्यते ।
व्याघ्रभूत्यादस्त्वेनं, नेह पेठुरिति स्थितम् ॥१०॥
रञ्जि-मस्जी अदि-पदी, तुद् क्षुध-शुषि-पुषौ श्रिषिः ।
भाष्यानुक्ता नवेह्योक्ता व्याघ्रभूत्यादिसम्मताः ॥११॥

---

## APPENDIX. II.

*Important Rules to be learnt by heart.*

### आत्मनेपदप्रकरणम्

नेर्विशः—निविशते ।

* परिव्यवेभ्यः क्रियः— परिक्रीणीते, विक्रीणीते, अवक्रीणीते ।

विपराभ्यां जेः—विजयते, पराजयते ।

आङो दोऽनास्यविहरणे—आदत्ते विद्याम् न तु स्वमुखम् ।

समवप्रविभ्यः स्थः—संतिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते ।

---

* उभयपदिन एकपदाभिधानमन्यपदनिषेधार्थम् ।

क्रीडोऽनुसम्परिभ्यश्च—अनुक्रीडते, संक्रीडते परिक्रीडते, आक्रीडते ।

उदोऽनूर्द्ध्वकर्मणि—मुक्तावुत्तिष्ठते न तु पीठात् ।

उपान्मन्त्रकरणे—सूर्यमुपतिष्ठते ।

अकर्मकाच्च—पठनकाले उपतिष्ठते ।

समोगम्यृच्छिभ्याम्—संगच्छते, समृच्छते ।

[ अकर्मकादेव ]

अपह्नवे ज्ञः—शतमपजानीते ।

ज्ञाश्रुस्मृदृशां सनः—जिज्ञासते, शुश्रूषते, सुस्मूर्षते, दिदृक्षते ।

नानोर्ज्ञः—पुत्रमनुजिज्ञासति ।

प्रत्याङ्भ्यां श्रुवः—प्रतिशुश्रूषति, आशुश्रूषति ।

[ इमे सूत्रे “ ज्ञाश्रुस्मृदृशां सन इत्यस्य बाधके ]



# परस्मैपदप्रकरणम् ।

—:०:—

अनुपराभ्यां कृञः—अनुकरोति, पराकरोति ।

व्याङ्परिभ्यो रमः—विरमति, आरमति, परिरमति ।

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः—बोधयति, योधयति, नाशयति, जनयति, अध्यापयति ।

निगरणचलनार्थेभ्यश्च—निगारयति, आशयति, चलयति, कम्पयति [ अदेः प्रतिषेधः ]



# APPENDIX. III

" भ्वाद्यदादी जुहोत्यादि-र्दिवादिः स्वादिरेव च ।
तुदादिश्च रुधादिश्च तनक्र्यादी च चुरादयः "

| Root. | Conjugation. | Atmanepada or Parasmaipada | Present Tens लट् | First Preterite लङ् |
|---|---|---|---|---|
| अट् | 1 | P. | अटति | आटत् |
| अद् | 2 | P. | अत्ति | आदत् |
| अय् | 1 | A. | अयते | आयत |
| अर्च् | 1,10 | P. | अर्चति | आर्चत् |
| अर्ज् | 1. | P. | अर्जति | आर्जत् |
| अर्थ् | 10 | A. | अर्थयते | आर्थयत |
| अर्ह् | 1 | P. | अर्हति | आर्हत् |
| अश् | 9 | ,, | अश्नाति | आश्नात् |
| अस् | 4 | ,, | अस्यति | आस्यत् |
| अस् | 2 | ,, | अस्ति | आसीत् |
| आस् | 2 | A. | आस्ते | आस्त |
| इ | 1 | P. | अयति | आयत् |
| इ | 2 | P. | एति | ऐत् |
| इ | 2 | A. | अधीते | अध्यैत |
| इष् | 6 | P. | इच्छति | ऐच्छत् |
| ईक्ष् | 1 | A. | ईक्षते | ऐक्षत |



| Indifinite Future लृट् | Imperative mood लोट् | Present Participle शतृ or शानच् | Past Participle क्त |
|---|---|---|---|
| अटिष्यति | अटतु | अटत् | अटित |
| अत्स्यति | अत्तु | अदत् | जग्ध |
| अयिष्यते | अयताम् | अयमान | अयित |
| अर्चिष्यति | अर्चतु | अर्चत् | अर्चित |
| अर्जिष्यति | अर्जतु | अर्जत् | अर्जित |
| अर्थयिष्यते | अर्थयताम् | अर्थयमान | अर्थित |
| अर्हिष्यति | अर्हतु | अर्हत् | अर्हित |
| अशिष्यति | अश्नातु | अश्नत् | अशित |
| असिष्यति | अस्यतु | अस्यत् | अस्त |
| भविष्यति | अस्तु | सत् | भूत |
| आसिष्यते | आस्ताम् | आसीन | आसित |
| एष्यति | अयतु | अयत् | इत |
| एष्यति | एतु | यत् | इत |
| अध्येष्यते | अधीताम् | अधीयान | अधीत |
| एषिष्यति | इच्छतु | इच्छत् | इष्ट |
| ईक्षिष्यते | ईक्षताम् | ईक्षमाण | ईक्षित |

| Root. | Conjugation | Atmanepad or Parasmaipada. | Present Tense लट् | First Preterite. लङ् |
|---|---|---|---|---|
| ईह् | 1 | A. | ईहते | ऐहत |
| कत्थ् | 1 | A. | कत्थते | अकत्थत |
| कथ् | 10 | P. | कथयति | अकथयत् |
| कम् | 1 | A. | कामयते | अकामयत |
| कम्प् | 1 | A. | कम्पते | अकम्पत |
| कल् | 10 | P. | कलयति | अकलयत् |
| काङ्क्ष् | 1 | P. | काङ्क्षति | अकाङ्क्षत् |
| काश् | 1 | A. | काशते | अकाशत |
| *कृ | 5 | A.P. | करोति / कुरुते | अकरोत् / ... ... ... ... |
| कृप् | 1 | A, | कल्पते | अकल्पत |
| कृष् | 1 | P. | कर्षति | अकर्षत् |
| क्रन्द् | 1 | P. | क्रन्दति | अक्रन्दत् |
| क्री | 9 | A.P. | क्रीणाति / क्रीणीते | अक्रीणात् / ............ |
| क्रीड् | 1 | P. | क्रीडति | अक्रीडत् |
| क्रुध् | 4 | ,, | क्रुध्यति | अक्रुध्यत् |
| क्लिश् | 4 | ,, | क्लिश्यति | अक्लिश्यत् |
| क्षम् | 1 | A. | क्षमते | अक्षमत |

* उभयपदिन आत्मनेपदरूपाणि स्वयं बोद्धव्यानि ।

| Indifinite Future लृट् | Imperative mood लोट् | Present Participle. शतृ or शानच् | Past Participle. क्त |
|---|---|---|---|
| ईहिष्यते | ईहताम् | ईहमान | ईहित |
| कत्थिष्यते | कत्थताम् | कत्थमान | कत्थित |
| कथयिष्यति | कथयतु | कथयत् | कथित |
| कामयिष्यते | कामयताम् | कामयमान | कान्त |
| कम्पिष्यते | कम्पताम् | कम्पमान | कम्पित |
| कलयिष्यति | कलयतु | कलयत् | कलित |
| काङ्क्षिष्यति | काङ्क्षतु | काङ्क्षत् | काङ्क्षित |
| काशिष्यते | काशताम् | काशमान | काशित |
| करिष्यति | करोतु | कुर्वत् | कृत |
| कल्पिष्यते | कल्पताम् | कल्पमान | कल्पित |
| क्रक्ष्यति | कर्षतु | कर्षत् | कृष्ट |
| क्रन्दिष्यति | क्रन्दतु | क्रन्दत् | क्रन्दित |
| क्रेष्यति | क्रीणातु | क्रीणत् | क्रीत |
| क्रीडिष्यति | क्रीडतु | क्रीडत् | क्रीडित |
| क्रोत्स्यति | क्रुध्यतु | क्रुध्यत् | क्रुद्ध |
| { क्लेशिष्यति<br>{ क्लेक्ष्यति | क्लिश्यतु | क्लिश्यत् | क्लिष्ट |
| क्षमिष्यते | क्षमताम् | क्षममाण | क्षान्त |

| 5 A | | | | |
|---|---|---|---|---|
| Root | Conjugation. | Atmanepada or parasmaipada. | Present Tense लट् | First Preterite. लङ् |
| क्षिप् | 6 | P. | क्षिपति | अक्षिपत् |
| क्षुभ् | 1.4.9 | P(4) | क्षुभ्यति | अक्षुभ्यत् |
| गण् | 10 | P.A. | गणयति<br>गणयते | अगणयत्<br>............ |
| गद् | 1 | P. | गदति | अगदत् |
| गम् | 1 | ,, | गच्छति | अगच्छत् |
| गर्ज् | 1 | ,, | गर्जति | अगर्जत् |
| गाह् | 1 | A. | गाहते | अगाहत |
| ग्रह् | 9 | A.P. | गृह्णाति<br>गृह्णीते | अगृह्णात्<br>.............. |
| घ्रा | 1 | P. | जिघ्रति | अजिघ्रत् |
| चर | 1 | ,, | चरति | अचरत् |
| चल | 1 | ,, | चलति | अचलत् |
| चि | 5 | P.A. | चिनोति<br>चिनुते | अचिनोत्<br>.............. |
| चिन्त् | 10 | A.P. | चिन्तयति<br>चिन्तयते | अचिन्तयत्<br>.............. |
| छिद् | 7 | A.P. | छिनत्ति<br>छिन्ते | अच्छिनत्<br>.............. |
| जन् | 4 | A. | जायते | अजायत |
| जागृ | 2 | P. | जागर्ति | अजागः |
| जि | 1 | P. | जयति | अजयत् |

| Indifinite Future लृट् | Imperative mood लोट् | Present Participle शतृ or शानच् | Past Participle क्त |
|---|---|---|---|
| क्षेप्स्यति | क्षिपतु | क्षिपत् | क्षिप्त |
| क्षोभिष्यति | क्षुभ्यतु | क्षुभ्यत् | क्षुब्ध |
| गणयिष्यति | गणयतु | गणयत् | गणित |
| ............ | ............ | ............ | ............ |
| गदिष्यति | गदतु | गदत् | गदित |
| गमिष्यति | गच्छतु | गच्छत् | गत |
| गर्जिष्यति | गर्जतु | गर्जत् | गर्जित |
| गाहिष्यते | गाहताम् | गाहमान | गाढ़ |
| ग्रहीष्यति | गृह्णातु | गृह्णत् | गृहीत |
| ......... | ............ | ............ | ............ |
| घ्रास्यति | जिघ्रतु | जिघ्रत् | घ्रात |
| चरिष्यति | चरतु | चरत् | चरित |
| चलिष्यति | चलतु | चलत् | चलित |
| चेष्यति | चिनोतु | चिन्वत् | चित |
| ............ | ............ | ............ | ............ |
| चिन्तयिष्यति | चिन्तयतु | चिन्तयत् | चिन्तित |
| ............ | ............ | ............ | ............ |
| छेत्स्यति | छिनत्तु | छिन्दत् | छिन्न |
| ............ | ............ | ............ | ............ |
| जनिष्यते | जायताम् | जायमान | जात |
| जागरिष्यति | जागर्तु | जाग्रत् | जागरित |
| जेष्यति | जयतु | जयत् | जित |

| Root. | Conjugation | Atmanepad or Parasmaipada | Present Tense लट् | First Preterite लङ् |
|---|---|---|---|---|
| ज्ञा | 9 | A. P. | जानाति<br>जानीते | अजानात् |
| तप् | 1 | P. | तपति | अतपत् |
| तुष् | 4 | ,, | तुष्यति | अतुष्यत् |
| दंश् | 1 | ,, | दशति | अदशत् |
| दह् | 1 | ,, | दहति | अदहत् |
| दा | 1 | ,, | यच्छति | अयच्छत् |
| दिश् | 6 | ,, | दिशति | अदिशत् |
| दुह् | 2 | ,, | दोग्धि | अदुहत |
| दृश् | 1 | ,, | पश्यति | अपश्यत् |
| धा | 3 | A.P. | दधाति<br>धत्ते | अदधात् |
| धाव् | 1 | A.P. | धावति<br>धावते | अधावत्<br>अधावत |
| धु | 1.5,9 | A.P. | धुनोति<br>धुनुते | अधुनीत् |
| नम् | 1 | P. | नमति | अनमत् |
| नश् | 4 | P. | नश्यति | अनश्यत् |
| नी | 1 | A.P. | नयति<br>नयते | अनयत्<br>अनयत |
| पठ् | 1 | P. | पठति | अपठत् |

| Indifinite Future लृट् | Imperative mood लोट् | *Present Participle* शातृ or शानच् | Past Participle क्त |
|---|---|---|---|
| ज्ञास्यति | जानातु | जानत् | ज्ञात |
| ............ | ............ | ............ | ............ |
| तप्स्यति | तपतु | तपत् | तप्त |
| तोक्ष्यति | तुष्यतु | तुष्यत् | तुष्ट |
| दङ्क्ष्यति | दशतु | दशत् | दष्ट |
| धक्ष्यति | दहतु | दहत् | दग्ध |
| दास्यति | यच्छतु | यच्छत् | दत्त |
| देक्ष्यति | दिशतु | दिशत् | दिष्ट |
| धोक्ष्यति | दोग्धु | दुहत् | दुग्ध |
| द्रक्ष्यति | पश्यतु | पश्यत् | दृष्ट |
| धास्यति | दधातु | दधत् | हित |
| ............ | ............ | ............ | ............ |
| धाविष्यति | धावतु | धावत् | धावित |
| ............ | ............ | ............ | ............ |
| धोष्यति | धुनोतु | धुन्वत् | धुत |
| ............ | ............ | ............ | ............ |
| नंस्यति | नमतु | नमत् | नत |
| नङ्क्ष्यति | नश्यतु | नश्यत् | नष्ट |
| नेष्यति | नयतु | नयत् | नीत |
| ............ | ............ | ............ | ............ |
| पठिष्यति | पठतु | पठत् | पठित |

| Root | Conjugation | Atmanepada or Parasmaipada. | PersentTense लट् | First Preterite. लङ् |
|---|---|---|---|---|
| पत् | 1 | P. | पतति | अपतत् |
| पद् | 4 | A. | पद्यते | अपद्यत |
| पा | 1 | P, | पिबति | अपिबत् |
| पा | 2 | ,, | पाति | अपात् |
| ब्रू | 2 | A. ,, | ब्रवीति / ब्रूते | अब्रवीत् / ............ |
| भा | 2 | P. | भाति | अभात् |
| भिद् | 7 | ,, | भिनत्ति / भिन्ते | अभिनत् / ............ |
| भी | 3 | ,, | बिभेति | अबिभः |
| भुज् | 7 | A. | भुङ्क्ते | अभुङ्क्त |
| भुज् | 7 | P. | भुनक्ति | अभुनक् |
| भू | 1 | ,, | भवति | अभवत् |
| भ्रम् | 1 | ,, | भ्रमति | अभ्रमत् |
| भ्रम् | 4 | ,, | भ्राम्यति | अभ्राम्यत् |
| मन् | 4 | A. | मन्यते | अमन्यत |
| मिल | 6 | P. | मिलति | अमिलत |
| मील् | 1 | ,, | मीलति | अमीलत् |
| मुच् | 6 | ,, | मुञ्चति | अमुञ्चत् |

| Indifinitive Future ऌट् | Imperative mood लोट् | Present Participal. शतृ or शानच् | Past Participle क्त |
|---|---|---|---|
| पतिष्यति | पततु | पतत् | पतित |
| पत्स्यते | पद्यताम् | पद्यमान | पन्न |
| पास्यति | पिबतु | पिबत् | पीत |
| पास्यति | पातु | पात् | पात |
| वक्ष्यति | ब्रवीतु | ब्रुवत् | उक्त |
| ............ | ............ | ............ | ......... |
| भास्यति | भातु | भात् | भात |
| भेत्स्यति | भिनत्तु | भिन्दत् | भिन्न |
| ............ | ............ | ............ | ......... |
| भेष्यति | बिभ्यतु | बिभ्यत् | भीत |
| भोक्ष्यते | भुङ्क्ताम् | भुञ्जान | भुक्त |
| भोक्ष्यति | भुनक्तु | भुञ्जत् | ,, |
| भविष्यति | भवतु | भवत् | भूत |
| भ्रमिष्यति | भ्रमतु | भ्रमत् | भ्रान्त |
| ,, ,, | भ्राम्यतु | भ्राम्यत् | ,, |
| मंस्यते | मन्यताम् | मन्यमान | मत |
| मिलिष्यति | मिलतु | मिलत् | मिलित |
| मीलिष्यति | मीलतु | मीलत् | मीलित |
| मोक्ष्यति | मुञ्चतु | मुञ्चत् | मुक्त |

| Root. | Conjugation. | Atmanepada or Parasmaipada | Present Tence लट् | Present Pretrite लङ् |
|---|---|---|---|---|
| मुद् | 1 | A. | मोदते | अमोदत |
| मुह् | 4 | P. | मुह्यति | अमुह्यत् |
| मृ | 6 | A. | म्रियते | अम्रियत |
| यत् | 1 | A. | यतते | अयतत |
| या | 2 | P. | याति | अयात् |
| याच् | 1 | A. | याचते | अयाचत |
| युध् | 4 | A. | युध्यते | अयुध्यत |
| रच् | 10 | P. | रचयति | अरचयत् |
| रभ् | 1 | A. | रभते | अरभत |
| रुद् | 2 | A. | रोदिति | अरोदत् |
| रुध् | 7 | P. | रुणद्धि | अरुणत् |
| लभ् | 1 | A. | लभते | अलभत |
| वन्द् | 1 | A. | वन्दते | अवन्दत |
| वर्ण | 10 | A. | वर्णयति | अवर्णयत् |
| वस | 1 | P. | वसति | अवसत् |
| *विद | 2 | P. | वेत्ति | अवेत् |

* विद् 4c. to exist विद्यते, 6c. to acquire विन्दति

12 B

| Infinitive Futur लृट् | Imperative mood लोट् | Present Participle शतृ or शानच् | Past Participle क्त |
|---|---|---|---|
| मोदिष्यते | मोदताम् | मोदमान | मुदित |
| मोहिष्यति / मोक्ष्यति | मुह्यतु | मुह्यत् | मुग्ध, मूढ़ |
| मरिष्यति | म्रियताम् | म्रियमाण | मृत |
| यतिष्यते | यतताम् | यतमान | यत्त |
| यास्यति | यातु | यात् | यात |
| याचिष्यते | याचताम् | याचमान | याचित |
| योत्स्यते | युध्यताम् | युध्यमान | युद्ध |
| रचयिष्यति | रचयतु | रचयत् | रचित |
| रप्स्यते | रभताम् | रभमाण | रब्ध |
| रोदिष्यति | रोदितु | रुदत् | रुदित |
| रोत्स्यति | रुणद्धु | रुन्धत् | रुद्ध |
| लप्स्यते | लभताम् | लभमान | लब्ध |
| वन्दिष्यते | वन्दताम् | वन्दमान | वन्दित |
| वर्णयिष्यते | वर्णयतु | वर्णयत् | वर्णित |
| वत्स्यति | वसतु | वसत् | उषित |
| वेत्स्यति | वेत्तु | विद्वस् / विदत् | वित्त |

| Root. | Conjugation | Atmanepad or Parasmaipada | Present Tense लट् | First Preterite लङ् |
|---|---|---|---|---|
| विश् | 6 | P. | विशति | अविशत् |
| वृ | 5 | A.P. | वृणोति | अवृणोत् |
| | | | वृणुते | ............... |
| वृत् | 1 | A. | वर्तते | अवर्तत |
| शक् | 5 | A.P. | शक्नोति | अशक्नोत् |
| | | | शक्नुते | ............... |
| शी | 2 | A. | शेते | अशेत |
| श्रु | 1 | P. | शृणोति | अशृणोत् |
| सद् | 1 | P. | सीदति | असीदत् |
| सह् | 1 | A. | सहते | असहत |
| सृज् | 6 | P. | सृजति | असृजत् |
| सेव् | 1 | A. | सेवते | असेवत |
| स्था | 1 | P. | तिष्ठति | अतिष्ठत् |
| स्पृश् | 6 | P. | स्पृशति | अस्पृशत् |
| स्मृ | 1 | P. | स्मरति | अस्मरत् |
| स्वप् | 2 | P. | स्वपिति | अस्वपत् |
| हन् | 2 | P. | हन्ति | अहन् |
| हस् | 1 | P. | हसति | अहसत् |
| हा | 3 | P. | जहाति | अजहात् |
| ह्वे | 1 | P.A. | ह्वयति | अह्वयत् |
| | | | ह्वयते | ............... |

| Indifinite Future लृट् | Imperative mood लोट् | *Present Participle* शतृ or शानच् | Past Participle क्त |
|---|---|---|---|
| वेक्ष्यति | विशतु | विशत् | विष्ट |
| वरिष्यति | वृणोतु | वृणवत् | वृत |
| ………… | ………… | ………… | ………… |
| वर्त्तिष्यते / वर्त्स्यति | वर्त्तताम् | वर्त्तमान | वृत्त |
| शक्ष्यति | शक्नोतु | शक्नुवत् | शक्त |
| ………… | ………… | ………… | ………… |
| शयिष्यते | शेताम् | शयान | शयित |
| श्रोष्यति | शृणोतु | शृण्वत् | श्रुत |
| सत्स्यति | सीदतु | सीदत् | सन्न |
| सहिष्यते | सहताम् | सहमान | सोढ |
| स्रक्ष्यति | सृजतु | सृजत् | सृष्ट |
| सेविष्यते | सेवताम् | सेवमाम | सेवित |
| स्थास्यति | तिष्ठतु | तिष्ठत् | स्थित |
| स्प्रक्ष्यति | स्पृशतु | स्पृशत् | स्पृष्ट |
| स्मरिष्यति | स्मरतु | स्मरत् | स्मृत |
| स्वप्स्यति | स्वपितु | स्वपत् | सुप्त |
| हनिष्यति | हन्तु | घ्नत् | हत |
| हसिष्यति | हसतु | हसत् | हसित |
| हास्यति | जहातु | जहत् | हीन |
| ह्वयिष्यति | ह्वयतु | ह्वयत् | हूत |
| ………… | ………… | ………… | ………… |

# APPENDIX. IV.

## UNIVERSITY PAPERS.

### ENTRANCE.

1878—Q—The sun is just set. The air is cool. There is no cloud in the blue sky. The cows lie down on the soft grass and chew the cud. A sweet smell comes from a bed of jasmine. Flocks of gay birds fly into the thick wood. The corn looks fresh and green. A brisk be hums near me. Her day's hard toil is done. She goes back to her neat hive. It grows dark. The bright moon and stars will soon rise and give us light.

A—इदानीमेव रविरस्तमितः । समीरः शीतलोऽस्ति । नीले नभसि मेघो न विद्यते । कोमल तृणोपरि धेनवः शेरते, रोमन्थायन्ते च । मल्लिकाकुसुम वाटिकायाः शोभनो गन्ध आगच्छति । प्रहृष्टविहङ्ग-कुलानि निविडारण्यमभिपतन्ति । नवानि श्यामलानि च शस्यानि शोभन्ते । चटुलैका मधुमक्षिका मदन्तिके गुञ्जति । समाप्तोऽस्ति तस्या दैनिकः कठिनः श्रमः । अधुना सा स्वकीयं सुगठितं मधुचक्रं प्रतिगच्छति । अन्धकारो

जायते। समुज्ज्वलः शशधरो नक्षत्राणि च सत्वरमेव उदेष्यन्ति दास्यन्ति चालोकमसम्भ्रमम्।

1879—Q—It became darker. He thought that he would have to spend the night in the street, and tears rolled down his cheeks. At last he began to cry aloud. A kind man, who happened to pass by that way, stopped and asked the cause of the childs distress. The boy told him every thing. The kind man pitied him and brought him home safely.

A—क्रमेण ध्वान्तं गाढ़तरं जातम्। गलदश्रु विधौत-कपोलः स समचिन्तयत्, यन्मया मार्ग एवैषा रजनी यापनीयेति। अथ स उच्चैः रोदितुमुपचक्रमे। तमेव मार्गमतिक्रामन् कोऽपि दयालुः स्थित्वा तस्य दुःखकारणं पृष्टवान्। असौ बालकस्तस्मै सर्व्वं निवेदितवान्। अथ तेन दयालुनासौ अनुकम्पितो निर्व्विघ्नं स स्वगृहं प्रापितः।

1880—Q—(a) The king is the guardian of religion. (b) Anarchy begets many evils in a country. (c) War is the offspring of anger. (d) Forgiveness is the spirit of the spirited, the truth of the truthful, and the devotion of the devout.

A—(a) "राज्ञा प्रतिष्ठितो धर्मः। (b) "अराजके जनपदे बहवो दोषा जायन्ते" (c) "क्रोधमूलो हि विग्रहः"। (d) "क्षमा तेजस्विनां तेजः, क्षमा ब्रह्म तपस्विनाम्। क्षमा सत्यव्रतां सत्यम्"।

A1881—Q—An ass having found the skin of a lion put it on, and going into the fields amused him-self by frightening all the animals he met; and seeing a jackel, he tried to alarm him also. But the jackel perceiving his long ears sticking out, and hearing his voice, at once knew who he was; "Ah!" said he, "I should have been frightened too, if I had not heard you bray."

A—कश्चिद्रासभः कस्यचित् सिंहस्य चर्म्मासाद्य परिहितवान् क्षेत्रेषु च गत्वा, मिलितानां सर्व्वेषामेव जन्तूनां भीषणेन आत्मानममोदयत। अथ जम्बुकमेकमवलोक्य तमपि त्रासयितुम् चेष्टतेस्म। जम्बुकस्तु तस्य दीर्घौ कर्णौ उद्भिन्नाववलोक्य, स्वरमाकर्ण्य च कोऽसाविति तत्क्षणादेव ज्ञातवान्। आह च "अहो! यद्यहं त्वां शब्दायमानं नाश्रोष्यम्, तदाहमपि भीतोऽभविष्यमिति"।

1882—Q—It is the time of down. The sun will soon rise. The air is cool. This is the best time to walk. If we walk in the

morn we shall have health. We must get out of bed ere the sun rises. Do not walk on the grass, for it is wet with dew. How bright are the drops of dew on the blades of grass! How the birds sing on the tree! What fine hues are seen in the east! The sun will rise there.

A—अयं हि प्रभातसमयः। सत्वरमेव रविरुदेष्यति। शीतलोऽस्ति वायुः। सुसमयोऽयं विहरणाय। यदि वयमुषसि भ्राम्येम, तदा स्वास्थ्यं लभेमहि। सूर्य्योदयात् प्रागेवास्माभिः शयनीयादुत्थातव्यम्। तृणोपरि मा भ्रम यतः शिशिरार्द्रमेतत्। कथमिव द्युतिमन्तः शिशिरबिन्दवस्तृणपत्रेषु शोभन्ते! कीदृङ्मधुरमेते विहगा वृक्षोपरि गायन्ति। कीदृग्रमणीया वर्णाः पूर्व्वस्यां दिशि शोभन्ते। तत्र हि रविरुदेष्यति।



# GENERAL GLOSSARY.

## II

From English into Sanskrit.

[ A ]

Accidentally अकस्मात् *ind.*

After a moment. क्षणानन्तरम् *adv.*

Age वयस् *n,*

Air, the wind वायु, समीरण *m.*

Ah ! alas; हा *ind.*

All सर्व *pro.* [ in every gender ] सर्वः, सर्वा सर्वम्

Always सर्वदा सदा *ind.*

Another अपर *pro,*

Arm बाहु *m.*

Art, skilfulness कौशल *n,*

Assembly, a meeting, commitee समिति *f.*

Attentive अवहित *adj.*

Astonished, surprised चकित *adj.*

[ B ]

Bad canduct, of bad conduct दुराचारn *adj.*

Banyantree न्यग्रोध *m.*

Be, remain वृत 1st. *c,a.*

Beard कूर्च *n.*

Be able शक् *a.*

Be ashamed लज्ज् 1st *c. a.*

Be fit, to become शुभ्

Before अग्रे *used as an adv.*

Beg, pray for याच् 1st *c. a,*

Beggar भिक्षुक *adj.*

Begin रभ् ( 1st *c. a.* ) with आ or with प्र + आ

Bench, a scaffold मञ्च m.
Best blessing, bride-groom वर adj.
Big-bellied तुन्दिल adj.
Bite दश् ( दंश् ).
Black-bee मधुकर चञ्चरीक m.
Black-bird कोकिल m.
Blessed धन्य adj.
Blue colour नील n.
Blue नील adj.
Bottom तल m.
Bow धनुस् u.
Branch शाखा f.
Brave, bold साहसिक adj.
Bull, cow गो m, f.
But किन्तु adv.
buzz झं+कृ

[ C ]

Call आ+हृ+अय्.
Cannibal राक्षस m. a.
Certainly अवश्यम् adv.
Chew चर्व 1st c. p.
Child शिशु वत्स m. a.
Class वर्ग m. a.
Cold शीत m.
Cloud मेघ m.
Colour, letter, class वर्ण m. (ब्राह्मण &c)
Companion सहचर adj.
Conversation अलाप m.
To cock पच् 1tt c.
Country देश m.
Crowd, swarm सार्थ m.

[ D ]

Larkness अन्धकार m.
Death पञ्चत्व n.
Desert नि+वृत्.
Deity देव m.
Distressed दुःखित adj
Doubt शङ्क् Ist c. a. te
Doubt सन्देह m. a.
Drop विन्दु m.
Duty, what ought tobe done कर्त्तव्य n adj.

[ E ]

Earth, the ground भूमि *f.*

Education शिक्षा *f.*

Elephant हस्तिन् *m.*

Elephant गज *m.*

Empty शून्य *adj.*

Endure सह् 1st *c. a.*

Examination परीक्षा *f.*

Exertion उद्योग *m.*

Existence, condition, state स्थिति *f.*

Extremely अत्यन्तम् *adv.*

Eye नेत्र *n.*

[ F ]

Fame, glory यशस् *n.*

Fame, glory कीर्ति *f.*

Famous प्रसिद्ध *adj.*

Farmer कृषक *m.*

Father, father of सीता जनक m.

Fault अपराध m.

Fear भय *n.*

Fearful, dangerous भयङ्कर *adj.*

Festival उत्सव *m.*

The fig tree प्लक्ष *m.*

Fire अग्नि *m.*

First, firstly पूर्वम् *adv.*

Fist मुष्टि *f.*

Fit, worthy योग्य *adj.*

Flow स्यन्द् 1st *c. a.*

Food खाद्य *n.*

Food given to a beggar भिक्षा *f.*

Foot चरण *m.*

Foot-soldier पादात *m.*

Fox उल्कामुखी *f.*

Fraud, deceit कपट *m.* and *n.*

Friend *m.* the sun मित्र *n. a.*

[ G ]

Gander हंस m.

Gentility शील *n.*

Get लभ् 1st *c. a.*

भक *adj.*

Gold सुवर्ण *u*.

Good man सज्जन m. *a*.

Grand महत् *adj*.

Grotto, a den कन्दरा *f*.

[ H ]

Hand हस्त m.

Have &c. कल् 10th *c*.

He-goat, *f*. अज m.

Hero वीर m. *a*-

Honest, reliable प्रामा-णिक *adj*.

The honey of flowers मकरन्द, मरन्द m.

Husband पति m.

[ I ]

Increase एध् 1st *c*. *a*.

Information सूचन *n*.

Injustice अन्याय m.

Impatience अधीरता *f*.

Intellect मति *f*.

Invited आमन्त्रित *adj*.

[ J ]

Join मिल् 6th *c*. *p*.

[ K ]

King राजन् m.

Kingdom राज्य *n*.

Know ज्ञा 9th *c*. *a*. *p*.

[ L ]

Lie, falsehood असत्य *n*.

Large, long, tall &c. दीर्घ *adj*.

Leaf दल *n*.

Learn शिक्ष 1st *f*. *a*.

Lesson पाठ m.

Letter, leaf पत्र *n*.

Lie मिथ्या *ind*.

Like that तादृश *adj*.

Lion सिंह m.

Look grand शुभ (शोभ्) 1st *c*. *a*.

Loud उच्चैस् *ind*.

Love, to feel affection for स्निह् 4th *c*. *p*

[ M ]

Man मनुष्य m.

Many बहु *adj*.

Man and his wife दम्पति (always dual) m.

Mercy दया f.

Mind, the heart चित्त n

Mistake भ्रम m.

Moon सोम m.

Mother मातृ जननी f.

Mountain पर्वत m.

[ N ]

Name नामन् n.

Nature स्वभाव m.

Near समीप adj. (often used समीप as an adv.) presence

News वृत्तान्त m.

Noise कलकल m.

Noisy, foolish बर्बर adj.

( O )

O हे ind.

O अंहो ind.

Ocean वरुणालय m.

Oh! अहो ind.

Oneself स्वयम् ind.

One of great respectability महाशय, महामान्य adj.

Only केवलम् adv.

Other, अन्य pro.

Otherwise अन्यथा adv.

[ P ]

Parrot शुक m.

Passed उत्तीर्ण adj.

Pastime लीला f.

Patience धैर्य n.

Pea चणक m.

Peacock मयूर m.

Pearl मौक्तिक n.

Pity करुणा f.

Place स्थान n.

Play ground, arena, a stage रङ्गशाला, f.

Please, to be liked.

रुच् (रोच) 1st c. a.

Poor, helpless दीन adj.

Practice अभ्यास n.

Practice, manners, use व्यवहार m.

Proper उचित *ndj.*

Proverb आभाणक *m.*

Purport, moral तात्पर्य *n.*

(Q)

Quiet, in silence तूष्णीम् *adv.*

(R)

Rejoice मुद् (मोद्) 1st *c.* a.

Respectable मान्य *adj.*

Return परा+वृत्+1st *c. a.*

Request नि+विद्+अय् 1st c. a.

Reward. पारितोषिक *m.*

Rice of various kinds. व्रीहि *m.*

River. नदी *f.*

Roaming. पर्यटन *adj.*

Roaring. गर्जन *n.*

Rubbing against, scratching. कण्डूयमान *adj.*

(S)

Saffron कुङ्कुम *n.*

Salute. वन्द् 1st. *c. n.*

Sea, ocean समुद्र *m.*

See (see page 20) ईक्ष् 1st *c. a.*

Serpent, a snake सर्प *m.*

Serve सेव् 1st *c. a.*

Shake कम्प् 1st *c. a.*

She-goat अजा.

Shine काश् 1st *c. a.*

Shop आपण *m.*

Shriek आर्तनाद् *m.*

Silver रजत *n.*

Sinful पाप *n.* sin. *adj.*

Slack, loose शिथिल *adj.*

Slowly शनैः *ind.*

Smile स्मि (स्मय्) 1st *c. a.*

Sprinkle सिच् (सिञ्च्) 6 *c. p.*

Soft, mild कोमल *adj.*

Sorrow, grief शोक *m.*

Stiff जडीभूत *adj.*
String of a bow ज्या *f.*
Study अध्ययन *n.*
Subject प्रजा *f.*
Subject of a discourse, matter विषय *m.*
Summer ग्रीष्म *m.*
Sun सूर्य *m.*
Sweet, palatable स्वादु *adj.*
Tall,grand,huge विशाल *adj.*

( T )

Taste स्वाद् 1st *c. a.*
Tiger व्याघ्र *m.*
Timid भीरु *adj.*
Then तदा, अथ *ind.*
Thine त्वदीय *adj.*
Throb स्पन्द् 1st *c. a.*
Throne सिंहासन *n.*
Throwing क्षेप *m.*
Tomorrow श्वस् *ind.*
Tooth दन्त *m.*
Tree तरु *m.*
Truth, truly सत्यम् *n. advs.*
Try यत् 1st *c. a.*
Tusk दंष्ट्रा *f.*

( V )

Valley उपत्यका *m.*
Veda वेद *m.*
Very-much, extremely अतितराम् *adv.*
Villager, belonging to a village. ग्राम्य *n. adj.*

( W )

Walking पर्य्यटन *n.*
Wander, to roam भ्रम् 1st *c. and* 4*th c. p.*
Watered by a river नदीमातृक *m.*
Way मार्ग *m.*
Weak दुर्बल *adj.*
Welfare क्षेम *n.*
Weave वप् 1st. *c. a, p.*
Weapon शस्त्र *n. a.*

Where क्व *adv.*

White, clean गौर *adj.*

Wife पत्नी; जाया *f.*

Wife of Krishna रुक्मिणी f.

Wild वन्य *adj.*

Wish, will इच्छा f.

With सह *ind.*

Wrestling मल्लयुद्ध *n.*

Wrestler मल्ल *m.*

Write लिख् 6th *c. p.*

Wonder, brightness चमत्कार *m.*

Worship यज् *v.*

Worthy of being counted गणनीय *adj.*

(Y)

Young, fresh तरुण *adj.*



# GENERAL GLOSSARY.

## I

*( FROM SANSKRIT INTO ENGLISH )*

अकस्मात् *ind* accidentally.

अग्नि *m.* fire.

अग्रे *used as an adv.* before.

अज *m.* a he-goat, *f.* अजा a she-goat.

अतितराम् *adv.* very-much, extremely,

अत्यन्तम् *adv.* extremely.

अथ *ind.* then.

अधीरता *f.* impatience.

अध्ययन *n* study.

अन्धकार *m.* darkness.

अन्य *pro.* the other, another.

अन्यथा *adv.* otherwise.

अन्याय *m.* injustice.

अपर *pro.* another.

अपराध *m.* a fault.

अभ्यास *n.* practice.

अवश्यम् *adv.* certainly.

अवहित *adj.* attentive.

असत्य *n.* a lie, falsehood.

अहो *ind*, Oh!

आ + ह्व + अय् to call.

आभाणक *m.* a proverb.

आपण *m.* a shop.

आमन्त्रित *adj.* invited.

आर्तनाद *m.* a shriek.

आलाप *m.* conversation.

इच्छा *f.* wish, will.

ईक्ष् 1st *c.* *a.* to see, ( see page 20 )

उचित *adj.* proper.

उच्चैस् *ind.* a-loud.

उत्तीर्ण *adj.* passed.

उत्सव *m.* a festival.

उद्योग *m.* exertion.

उपत्यका *f.* valley.

उल्कामुखी f. a fox.

एध् 1st *c.* *a.* to increase.

( क )

कण्डूयमान *adj.* rubbing against, scratching.

कन्दरा f. a grotto, a den.

कपट *m.* and *n.* fraud deceit.

कम्प् 1st *c.* a. to shake.

कर्त्तव्य *n.* duty, adj. that ought to be done.

करुणा f. pity

कल् 10th *c.* to have &c.

कलकल *m.* noise.

काश् 1st *c. a.* to shine.

किन्तु *adv.* but.

किमिति *ind.* What ? किम्+इति

कीर्ति *f.* fame, glory.

कुङ्कुम *n.* saffron.

कुशल *n.* welfare.

कूर्च *n.* a beard.

कृषक *m.* a farmer.

केवलम् *adv.* only.

कोकिल *m.* the black bird.

कोमल *adj.* soft, mild.

कौशल *n.* art, skilfulness.

क्व adv. where ?

क्षणानन्तरम् *adv.* after a moment.

क्षेप m. throwing.

क्षेम *n.* welfare.

( ख )

खाद्य *n.* food.

( ग )

गज *m.* an elephant.

गणनीय *adj.* worthy of being counted.

गर्जन *n.* roaring.

गौर *adj.* white, clean.

गो *m.* a bull *f.* cow.

ग्राम्य *n.* a villager, *adj.* belonging to a village.

ग्रीष्म *m.* summer.

( च )

चकित *adj.* astonished, surprised.

चणक *m.* a pea.

चन्द्रमस् *m.* the moon.

चमत्कार *m.* wonder, brightness.

चरण *m.* foot.

चर्व् 1st *c. p.* to chew.

चित्त *n.* mind, the heart.

चञ्चरीक *m.* a black bee.

( ज )

जडीभूत *adj.* stiff.

जनक *m.* father or father of सीता.

जननी *f.* mother.

जम्पति *m.* ( always dual ) a man and his wife.

जाया *f.* wife.

ज्ञा 9th *c. a. p.* to know.

ज्या *f.* the string of a bow.

( झ )

झं + कृ to buzz.

( त )

तरु *m.* a tree.

तरुण *adj.* young, fresh.

तल *n.* bottom.

तात्पर्य *n.* purport, moral.

तादृश *adj.* like that.

तुन्दिल *adj.* big-bellied.

silence para left

त्वदीय *adj.* yours thing.

( द )

दन्त *m.* tooth.

दम्पति *m.* [ always dual ] a man and his wife.

दया *f.* mercy,

दल *n.* a leaf,

दश् ( दन्श् ) to bite,

दायक *adj.* giver,

दीन adj. poor, helpless,

दीर्घ adj, large, long, tall &c,

दुःखित adj, distressed,

दुराचार ad. of bad conduct, *n.* bad conduct,

दुर्बल *adj.* weak,

देव *m.* a diety,

देश *m.* country,

दंष्ट्रा *f.* tusk,

[ ध ]

धन्य *adj.* blessessed,

धरा *f.* the earth,

धनुस् *n.* a bow,

धैर्य *n*, patience,

[ न ]

नदी *f.* a river,

नदीमातृक *m.* watered by a river.

नामन् *n.* name,

नि + विद् + अय् to request,

नि + वृत् to desert,

नील *n.* the blue colour adj. m blue,

नेत्र *n.* the eye,

न्यग्रोध *m.* the Banyan tree,

[ प ]

पच् 1st *c.* to cook,

पञ्चत्व *n*, death,

पति *m.* husband,

पत्नी *f.* wife,

पत्र *n.* a letter or a leaf,

परा + वृत् 1st *c. a.* to return,

परीक्षा *f.* an examination,

पर्य्यटन *n*, walking,

पर्यटत् *adj.* roaming,

पर्वत *m.* a mountain,

पाठ *m.* a lesson,

पादात m, a foot soldier,
पानीय n, water,
पाप n, sin, adj. sinful.
पारितोषिक m, a reward.
पुरुष m, a man,
पूर्वम् adv. first, firstly.
प्रजा f, subject.
प्रसिद्ध adj. famous.
प्रामाणिक adj. honest, reliable,
प्लक्ष m, the fig tree,

(ब)

बर्बर adj. noisy, foolish,
बहु adj. many,
बालिन् m, name of a king of kishkindha,

( भ )

भय n, fear,
भयङ्कर adj. fearful, dangerous,
भिक्षुक adj. a begger.
भिक्षा f, food given to a beggar.
भीरु adj. timid.
भूमि f, the earth, the ground,
भ्रम् 1st c, and 4th c p to wander, to roam.
भ्रम m. a mistake.

( म )

मकरन्द m, the honey of flowers.
मति f. intelect,
मधुकर m. the black bee
मञ्च m. a bench, a scaffold.
मनुष्य m. a man,
मयूर m. a peacock.
मरन्द m. the honey of flowers.
मल्ल m. a wrestler,
मल्लयुद्ध n. a wrestling.
महत् adj. grand,
महाशय, महामान्य adj. of great respect ability
मातृ f. mother,

मान्य adj. respectable.
मार्ग m. a way.
मित्र n. a. friend m. the sun.
मिथ्या ind. lie.
मिल् 6th c p. to join.
मुद् (मोद् 1st c. a. to rejoyce.
मुष्टि f. the fist.
मेघ m. cloud.
मौक्तिक n. a pearl.

(य)

यज् to worship.
यत् 1st c. a. to try.
यशस् n. fame, glory.
याच् 1st c. a. to beg, to pray for.
योग्य adj. fit, worthy

( र )

रङ्गशाला f. a. play ground, arena, a stage.
रजत n. silver.
रभ् ( 1st c. a. ) with आ or with प्र+आ to begin.
राक्षस m. a. cannibal.
राधा f. name of a woman.
राजन् m. a king.
राज्य n. kingdom.
रुक्मिणी f. wife of Krishna.
रुच् (रोच्) 1st c. a. to please, to be liked.

(ल)

लज्ज् 1st c. a. to be ashamed.
लभ् 1st c. a. to get.
लिख् 6th c. p. to write.
लीला f. pastime.
लोक् 1st c. a. to see.

[ व ]

वत्स m. a. child.
वन्द् 1st c. a. to salute.
वन्य adj. Wild.
वप् 1st c. a. p. to sow, to weave.

**वयस्** *n.* age.
**वर** *adj.* best. *n.* blessing, bridegroom.
**वर्ग** *m.a* class.
**वर्ण** *m.* colour, letter or class(ब्राह्मण &c).
**वरुणालय** *m.* the ocean.
**बाहु** *m.* the arm.
**बाहुयुद्ध** *n.* wrestling.
**बिन्दु** *m.* a drop.
**विशाल** *adj.* tall, grand, huge.
**विषय** *m.* subject of a discourse, matter.
**वीर** *m. a.* hero.
**वृत्** 1st. *c. a.* to be, to remain.
**वृत्तान्त** *m.* news.
**वेद** *m.* Veda.
**व्रीहि** *m.* rice of various kinds.
**व्यवहार** *m.* use, practice, manners.
**व्याघ्र** *m.* a tiger.

[ श ]

**शक्** 5 C.P.A. to be able
**शङ्क्** 1 C. A. to doubt.
**शनैः** *ind.* slowly.
**शस्त्र** *n. a* weapon.
**शाखा** *f.* a branch.
**शिक्षा** 1st *f. a* to learn
**शिक्षा** *f.* education.
**शिथिल** *adj.* slack, loose.
**शीत** *n.* cold.
**शील** *n.* gentility.
**शुक** *m.* a parrot.
**शुभ्** [ शोभ ] 1st. *c.a.* to look grad, to be fit, to become.
**शून्य** adj. empty.
**शोक** *m.* sorrow, grief.
**श्वस्** *ind.* tomorrow.

(स)

**सज्जन** *m.a* good man

सत्यम् *n.* truth, *advs.* truly.

सदा *ind.* always.

सन्देह *m.* *a* doubt.

समिति *f.* an assembly, a meeting, commitee.

समीप *adj.* near (often used समीपे as an adv.) presence.

समीरण *m.* the air, the wind'

समुद्र *m.* the sea, ocean.

सर्प *m.* a serpent a snake.

सर्व *pro.* सर्वः, सर्वा, सर्वम् all.

सर्वदा *ind.* always.

सह् *1st c. a.* to endure.

सह *ind.* with.

सहचर *adj.* a companion.

सार्थ *m.* crowd, swarm.

साहसिक *adj.* brave, bold.

सिंह *m.* a lion.

सिंहासन *n.* throne.

सुवर्ण *n.* gold,

सूचन *n.* information'

सूर्य *m.* the sun.

सेव् 1st *c. a.* to serve.

सोम *m.* the moon.

स्थान *n.* place.

स्थिति *f.* existence, condition, state.

स्निह् 4th *c. p.* to love to feel affection for.

स्पन्द् 1st *c, a.* to throb

स्मि (स्मय् 1st *c. a.* to smile.

स्यन्द् 1st. *c. atm.* to sprinkle, to flow.

स्वभाव *m.* nature.

स्वयम् *ind.* oneself.

स्वाद् 1st *c. a.* to taste.

स्वादु *adj* sweet, palatable.

हंस *m.* a gander.

हंहो *ind* O.

हस्त *m.* a hand.

हस्तिन् *m.* an elephant

हा *ind.* Ah ! alas;

हे *ind.* O.



# Sanskrit Reader.

## No. 1.

BY

**T. GANAPATI SASTRY,**

Principal,

H. H. The Maharajah's Sanskrit College,

TRIVANDRUM.



**Third Edition, 2,000 copies.**

PRINTED & PUBLISHED

BY

**K. NARAYANA AIYENGAR,**

*Proprietor—"Bhaskara" Press*

TRIVANDRUM.



1907.



**Price 5 annas.**

॥ श्रीः ॥

# प्रथमा पाठावली.

अनन्तशयनस्थ-

राजकीयसंस्कृतविद्यामन्दिराध्यक्षेण

तरुवै. गणपतिशास्त्रिणा

विरचिता.

अनन्तशयनस्थ-

भास्करमुद्रालये मुद्रयित्वा

प्रकाशिता.

१९०७ क्रिस्त्वब्दः.

मूल्यं ५ आणकाः.

# PREFACE.

The present work, which is the first of a progressive series of readers, is intended for the use of beginners who have had elementary lessons in spelling and pronunciation.

The vocabulary of this book consists only of the most familiar words of the language. The use of compound words is carefully avoided. Such words as "पदार्थ, अभाव". &c. are, however, used since they do not involve the usual intricacy of form or sense.

In the selection of subjects, the current English readers were largely consulted. The subjects included are interesting and instructive and are presented in a most comprehensible form. To heighten the effect of moral instruction fables are freely resorted to.

The lessons are so arranged as to make the earlier ones facilitate the study of the subsequent ones.

*T. G.*

# Contents.

# निवेदना.

---

आङ्गलभाषापाठावलिभ्यो हृदयङ्गमान् बहून् विषयानुच्चित्य कतिपयान् स्वयमुल्लिख्य च सोपानक्रमेण बालानामुपकाराय मया विरचितासु ललितचूर्णकप्रायासु पाठावलीष्वेषा प्रथमा पाठावली. अक्षराणि धारया वाचयितुं शक्ता बाला एनामध्येतुमर्हन्ति. बालानां रुचिकराः सुकुमारा लौकिका विषयाः प्रतिपाठमस्यां प्रतिपाद्यन्ते. तेषु केचिद्वस्तूनां तत्त्वं, कल्पितकथारूपाः केचिन्नीतिं च बोधयन्ति. अत्रातिप्रसिद्धान्येव पदानि प्रयुक्तानि. समस्ताः शब्दाः प्रायेण न विद्यन्ते, विद्यमानास्तु कतिपये 'पदार्थः' 'अभावः' 'पाठशाला' इत्यादयोऽतिप्रसिद्धत्वादसमस्तशब्दवदर्थतः स्वरूपतश्च सुगमा एव. अत्रोत्तरेषां पाठानां सुखावबोधो यथा स्यात्, तथा पूर्वे पाठा योजिताः.

त. गणपतिशास्त्रि.

# विषयानुक्रमः.



॥ श्रीः ॥

अ आ इ ई उ ऊ ऋ

ॠ ऌ ॡ ए ऐ ओ औ

अं अः

क ख ग घ ङ च छ ज झ ञ

ट ठ ड ढ ण त थ द ध न

प फ ब भ म य र ल व श

ष स ह ळ क्ष ज्ञ

१ २ ३ ४ ५ ६ ७ ८ ९ ०

| | | | | | | |
|---|---|---|---|---|---|---|
| क | ख | ग | घ | ङ | च | छ |
| का | खा | गा | घा | ङा | चा | छा |
| कि | खि | गि | घि | ङि | चि | छि |
| की | खी | गी | घी | ङी | ची | छी |
| कु | खु | गु | घु | ङु | चु | छु |
| कू | खू | गू | घू | ङू | चू | छू |
| कृ | खृ | गृ | घृ | ङृ | चृ | छृ |
| कॄ | खॄ | गॄ | घॄ | ङॄ | चॄ | छॄ |
| कॢ | खॢ | गॢ | घॢ | ङॢ | चॢ | छॢ |
| के | खे | गे | घे | ङे | चे | छे |
| कै | खै | गै | घै | ङै | चै | छै |
| को | खो | गो | घो | ङो | चो | छो |
| कौ | खौ | गौ | घौ | ङौ | चौ | छौ |
| कं | खं | गं | घं | ङं | चं | छं |
| कः | खः | गः | घः | ङः | चः | छः |



| | | | | | | |
|---|---|---|---|---|---|---|
| ज | झ | ञ | ट | ठ | ड | ढ |
| जा | झा | ञा | टा | ठा | डा | ढा |
| जि | झि | ञि | टि | ठि | डि | ढि |
| जी | झी | ञी | टी | ठी | डी | ढी |
| जु | झु | ञु | टु | ठु | डु | ढु |
| जू | झू | ञू | टू | ठू | डू | ढू |
| जृ | झृ | ञृ | टृ | ठृ | डृ | ढृ |
| जॄ | झॄ | ञॄ | टॄ | ठॄ | डॄ | ढॄ |
| जॢ | झॢ | ञॢ | टॢ | ठॢ | डॢ | ढॢ |
| जे | झे | ञे | टे | ठे | डे | ढे |
| जै | झै | ञै | टै | ठै | डै | ढै |
| जो | झो | ञो | टो | ठो | डो | ढो |
| जौ | झौ | ञौ | टौ | ठौ | डौ | ढौ |
| जं | झं | ञं | टं | ठं | डं | ढं |
| जः | झः | ञः | टः | ठः | डः | ढः |

| | | | | | | |
|---|---|---|---|---|---|---|
| ण | त | थ | द | ध | न | प |
| णा | ता | था | दा | धा | ना | पा |
| णि | ति | थि | दि | धि | नि | पि |
| णी | ती | थी | दी | धी | नी | पी |
| णु | तु | थु | दु | धु | नु | पु |
| णू | तू | थू | दू | धू | नू | पू |
| णृ | तृ | थृ | दृ | धृ | नृ | पृ |
| णॄ | तॄ | थॄ | दॄ | धॄ | नॄ | पॄ |
| णॢ | तॢ | थॢ | दॢ | धॢ | नॢ | पॢ |
| णे | ते | थे | दे | धे | ने | पे |
| णै | तै | थै | दै | धै | नै | पै |
| णो | तो | थो | दो | धो | नो | पो |
| णौ | तौ | थौ | दौ | धौ | नौ | पौ |
| णं | तं | थं | दं | धं | नं | पं |
| णः | तः | थः | दः | धः | नः | पः |

| | | | | | | |
|---|---|---|---|---|---|---|
| फ | ब | भ | म | य | र | ल |
| फा | बा | भा | मा | या | रा | ला |
| फि | बि | भि | मि | यि | रि | लि |
| फी | बी | भी | मी | यी | री | ली |
| फु | बु | भु | मु | यु | रु | लु |
| फू | बू | भू | मू | यू | रू | लू |
| फृ | बृ | भृ | मृ | यृ | | लृ |
| फॄ | बॄ | भॄ | मॄ | यॄ | | लॄ |
| फॢ | बॢ | भॢ | मॢ | यॢ | | |
| फे | बे | भे | मे | ये | रे | ले |
| फै | बै | भै | मै | यै | रै | लै |
| फो | बो | भो | मो | यो | रो | लो |
| फौ | बौ | भौ | मौ | यौ | रौ | लौ |
| फं | बं | भं | मं | यं | रं | लं |
| फः | बः | भः | मः | यः | रः | लः |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| व | श | ष | स | ह | ळ | क्ष | ज्ञ |
| वा | शा | षा | सा | हा | ळा | क्षा | ज्ञा |
| वि | शि | षि | सि | हि | ळि | क्षि | ज्ञि |
| वी | शी | षी | सी | ही | ळी | क्षी | ज्ञी |
| वु | शु | षु | सु | हु | ळु | क्षु | ज्ञु |
| वू | शू | षू | सू | हू | ळू | क्षू | ज्ञू |
| वृ | शृ | षृ | सृ | हृ | ळृ | क्षृ | ज्ञृ |
| वॄ | शॄ | षॄ | सॄ | हॄ | ळॄ | क्षॄ | ज्ञॄ |
| वॢ | शॢ | षॢ | सॢ | हॢ | ळॢ | क्षॢ | ज्ञॢ |
| वे | शे | षे | से | हे | ळे | क्षे | ज्ञे |
| वै | शै | षै | सै | है | ळै | क्षै | ज्ञै |
| वो | शो | षो | सो | हो | ळो | क्षो | ज्ञो |
| वौ | शौ | षौ | सौ | हौ | ळौ | क्षौ | ज्ञौ |
| वं | शं | षं | सं | हं | ळं | क्षं | ज्ञं |
| वः | शः | षः | सः | हः | ळः | क्षः | ज्ञः |

